अवाङ्मनसगम्ये च स्वमहिम्न्येव संस्थितम् ।
कदाचिदप्यनाधृष्यमहङ्कारविकारिणाम् ॥ ८ ॥

अकुतश्चिद्भयं सर्वभीषकं सत्तया तथा ।
अविनाश्य रसं योगं कान्तमेषाऽभिकाङ्क्षति ॥ ९ ॥

तच्छ्रुत्वा स सुखी पुत्र्या जातकौतूहलोऽवदत् ।
कुत एतद्व्यवसितमेतया तन्निरूपय ॥ १० ॥

सा प्रत्यवोचद्राजानं राजन् समवधारय ।
यदन्वयुङ्क्त सुजनानियं प्रारब्धयौवना ॥ ११ ॥

यद्यूयं करुणाशीला बाला पृच्छामि तेन वः ।
अस्मिन्नसारे संसारे परमः पुरुषोऽस्ति कः ॥ १२ ॥

श्रुत्वेमां वाचमेतस्याः सन्तः परममङ्गलाम् ।
सानन्दमभिनन्दतः प्रत्यवोचन्त सुन्दरीम् ॥ १३ ॥

परमः पुरुषो नूनमात्मैवास्तीह नापरः ।
तस्मात्सर्वात्मना कार्यः प्रयत्नस्तदवाप्तये ॥ १४ ॥

अथ पृष्टा इमामेव तेऽवदन्नात्मनो गुणान् ।
ततः प्रभृति पुत्री ते तं वरीतुमिहेच्छति ॥ १५ ॥

तद्राजन्मा विलम्बोऽत्र द्रागेव व्यवसीयताम् ।
इत्युक्तोऽसौ समाश्वास्य पुनः पुत्रीमगाद्बहिः ॥ १६ ॥

पुरोहितमथाहूय विचाराख्यं विशारदम् ।
निवेदितगुणं पुत्र्यै वरमन्वेष्टुमादिशत् ॥ १७ ॥

स राज्ञः प्राप्य तामाज्ञां प्रस्थितः प्राप्तमङ्गलः ।
वरमुक्तगुणोपेतमन्विष्यन्नभ्रमत्क्षितिम् ॥ १८ ॥

महानगरवीथीषु दम्भविख्यातिधारिणाम् ।
साङ्ख्यादिसौगतान्तानां कुलानि समशोधयत् ॥ १९ ॥

वरदोषं क्वचिद्दृष्ट्वा कुलदोषमपि क्वचित् ।
त्यक्त्वा तानि पुरोऽगच्छत्सुतीर्थान्वेषणेच्छया ॥ २० ॥

अथैकस्मिन्महातीर्थे शुचि वेदान्तिनां कुलम् ।
स समालोकयामास प्रमोदाकुलितान्तरः ॥ २१ ॥

सत्पक्षनिष्ठनिष्ठ्यूतदोषसंश्लेषपूरुषम् ।
पातकव्रातदुष्टानामप्रवेश्यं कदापि च ॥ २२ ॥

सुमनःसुमदामोदमावहन्तीभिरुच्चकैः ।
हृद्यं पल्लविताभिश्च लताभिरिव युक्तिभिः ॥ २३ ॥

सद्रूहभूरुहव्यूहवहनातिमनोहरम् ।
कण्टकावरणीभूतविचित्रमतदूषणम् ॥ २४ ॥

न भोगरुचिभिः साधुपक्षरक्षणलक्षितैः ।
अन्तर्धृतशुकालापैर्द्विजसङ्घैः समाश्रितम् ॥ २५ ॥

हृततापभवापत्तिप्रसारितरसाशयम् ।
किञ्चिन्मुक्तिविलासिन्या लीलावनमिवोज्ज्वलम् ॥ २६ ॥

नानासतीर्थयात्राभिः यथा वाराणसी गतिः ।
अगण्यपुण्यसम्भारैः व्युत्पत्तिर्यत्र जायते ॥ २७ ॥

स्वानन्दमेदुराः पापभवरोगव्यथोज्झिताः ।
परोपकारदीक्षायामक्षामस्थितिशालिनः ॥ २८ ॥

सुधाप्रणीतवार्णिकाः करुणोज्ज्वलहृदयः ।
व्युत्पन्ना यत्र दृश्यन्ते पुरुषा न रुषान्विताः ॥ २९ ॥

वधूभिर्युक्तिभिः पुम्भिस्तर्कैश्च व्यभिचारिभिः ।
कुलान्यन्यानि सन्यस्य मालिन्यमुपबिभ्रति ॥ ३० ॥

मुक्तिः कुलवधूर्यत्र निष्कलङ्के कुले किल ।
कलयन्ती परानन्दसन्दोहमवतिष्ठते ॥ ३१ ॥

आर्या नार्यश्चिरन्तन्यो यत्रोपनिषदः स्थिताः ।
संस्कृतश्लाघ्यवचनाः पुरुषैर्यदुपाश्रितैः ॥ ३२ ॥

हन्त यत्र प्रवेशोऽपि नानापुण्यफलं यदि ।
नित्यसम्बन्धसुश्लाघ्याव्युत्पत्तिस्तु किमुच्यताम् ॥ ३३ ॥

अहो यस्य श्रुतिपथातिथिभावमहोत्सवः ।
अनेकजन्मसञ्जातपातकव्रातघातुकः ॥ ३४ ॥

सद्योग इव सिद्धीनां शुद्धीनां कुलमन्दिरे ।
यत्र संलक्ष्यते कोऽपि नापवादः कदाचन ॥ ३५ ॥

दृष्ट्वैव पावनमिदं कुलमद्वितीयं
चेतः प्रसादपदमासददाशु यन्मे ।
यत्नस्तदत्र नियमेन फलिष्यतीति
निश्चित्य तत्समविशन्मुदितो विचारः ॥ ३६ ॥

अक्का जगन्नाथमसूत माता
पिता च नारायणदैवविद्यः ।
तन्निर्मिते ज्ञानविलासनाम्नि
काव्येऽत्र सर्गो व्यगमत्तुरीयः ॥

चतुर्थः सर्गः समाप्तः

॥ पञ्चमः सर्गः ॥

अथ पूर्णं विधुमिव प्रसन्ने शरदम्बरे ।
तत्राऽयं लोकयामास सद्गुरुं कुलनायकम् ॥ १ ॥

संसारविपिने तापतपनोत्तापतापिते ।
स्फीतशीतलसुच्छायं चतुष्पथमहाद्रुमम् ॥ २ ॥

वैशद्यहृद्यसुमनः प्रपञ्चितसुवासनम् ।
कलयन्तं सदालीनां वृत्तिं रसभृतां भृशम् ॥ ३ ॥

गतिं विवृण्वतां विष्णुपदे सद्गुणपक्षिणाम् ।
सत्कलोल्लाससहृद्यानां वहन्तं निवहं बहुम् ॥ ४ ॥

उच्चैरंहो बलाक्रान्तैर्विविधाशानिलैरपि ।
दृढमूढानुबन्धेन न कदापि श्लथीकृतम् ॥ ५ ॥

सुधामधुरसद्बोधफलसम्बन्धबन्धुरम् ।
दोषाशीविषविश्लेषाद्विशेषाश्रयणाञ्चितम् ॥ ६ ॥

अखण्डविलसन्मूलरससेकप्रसङ्गतः ।
विपल्लवदशां नैव संस्पृशन्तं कदाचन ॥ ७ ॥

अमृतासारघटिता यत्कृपापाङ्गभङ्गयः ।
दहन्ति हन्त सहसा संसारगहनं महत् ॥ ८ ॥

जाता जानीमहे गङ्गा यदपाङ्गावलम्बिनी ।
दृग्गतस्य धृतं पापं सन्तापं चापहन्ति यत् ॥ ९ ॥

यावत्स्वगोचरं प्राप्तान्मोचयन्त्या शरीरिणः ।
मुक्तिरेव दृशा यस्य बद्धाःस्पंत्याः गुणाःश्रयम् (?) ॥ १० ॥

घनकालुष्यनाशेन स्वच्छयन्ती जलाशयम् ।
कुर्वती तारकज्ञानं सद्विष्णुपददर्शनात् ॥ ११ ॥

सत्पक्षिणां मोदयित्री पङ्कसङ्करलोपिनी ।
विशारदस्य दृग्यस्य शारदश्रीरिवोज्ज्वला ॥ १२ ॥

क्लिन्नायां बहुजाड्येन विषयैर्विषबन्धुभिः ।
सततं सिच्यमानायां न स्फुरन्ति मनोभुवि ॥ १३ ॥

आक्रान्तं धूमततिभिः नानामलिनवृत्तिभिः ।
प्रदीपयति बोधाग्निं यस्य दृक् स्नेहवर्षिणी ॥ १४ ॥

नानामतैः स्वस्वपक्षव्याकर्षणविडम्बनैः ।
कलयामि किलानल्पवैकल्यमुपलम्भिता ॥ १५ ॥

यदपाङ्गे घनकृपातरङ्गहृदयङ्गमे ।
मुक्तिः कुलवरारोहा स्थितानन्दमयी चिरम् ॥ १६ ॥

दृष्टिर्यदीया कारुण्यपूरदूरविजृम्भिता ।
संलग्ना यत्र तत्र द्राक् चित्रं निर्यात्यं पापताम् ॥ १७ ॥

यत्कृपापाङ्गलहरौ जनाः कलितमज्जनाः ।
तरन्ति दुस्तरतरं सत्वरं भवसागरम् ॥ १८ ॥

सरस्वतीस्तनतटीकुरङ्गमदलेपिना ।
जलपात्रं विगाहन्ती कलितं ब्रह्मपाणिना ॥ १९ ॥

कृष्णाङ्घ्रौ चपलापाणिपङ्कजस्पर्शगर्हिणि ।
शिवमौलौ शिवापादरजःसङ्करनिस्सहा ॥ २० ॥

मुखे यस्य सुखेनैव युक्ते मुक्तामलद्विजैः ।
सुरनिर्झरिणी जाता वाणी पापपहारिणी ॥ २१ ॥

कलङ्कसङ्कुलामन्तस्तमःपरिभवोचिताम् ।
विधूय जानामि सुधा सुधादीधितिमण्डलीः ॥ २२ ॥

वैशद्यहृद्यां यद्वाणीं तमःप्रशमनीं श्रिता ।
अमरत्वमदःपानादुदेति कथमन्यथा ॥ २३ ॥

यदीयशीतला वाणी परामृततरङ्गिणी ।
भवदावप्रतप्तानां चित्रं जाड्यमपोहति ॥ २४ ॥

नानावर्णमयी यस्य वाणी साधुपदाश्रिता ।
एकाक्षरप्रकाशाय जायते हन्त केवलम् ॥ २५ ॥

यस्य नानापदाक्रान्ता नानावर्णमयी च वाक् ।
अमन्दर्शितानन्दा विशदाऽवेक्ष्यते कथम् ॥ २६ ॥

दुःखसम्पर्कदुस्तर्ककण्टकिद्रुमकर्कशम् ।
भ्रान्ता श्रान्तासना हन्त कान्तारं विविधं मतम् ॥ २७ ॥

सुमनःकलितामोदां वाणीं कल्पलतामिव ।
मुक्तिर्यदीयां सुच्छायामाश्रिता विश्रमं गता ॥ २८ ॥

यस्यामृततरङ्गिण्यां वाण्यां पुण्योज्ज्वलत्विषि ।
सदावतिष्ठते मुक्तिः परमोदकदेवता ॥ २९ ॥

सुवर्णधरतां यस्य वाग्विलासोऽवलम्बते ।
त्यक्तकुस्थितयो लोका विबुधाः स्युर्यदाश्रयात् ॥ ३० ॥

यस्य गौर्मानसगृहं प्रविष्टा भाग्ययोगतः ।
येन तत्र तदा चाशा तेन सा परिपोषिता ॥ ३१ ॥

प्रसूता बोधसद्वत्सं प्रयोगात्प्रस्नुतानिशम् ।
क्षीरं पाययते तं तत्परमानन्दलक्षणम् ॥ ३२ ॥

प्रशान्ततान्तभावं यच्चित्तमानन्दसम्पदा ।
स्थितं चिदवशेषेण विशेषेणेयमौचिती ॥ ३३ ॥

यदीयं हृदयाकाशं काशते हि तमोग्रहम् ।
दुष्टार्थकोपरागश्रीस्तत एवात्र लक्ष्यते ॥ ३४ ॥

अहो घनतमोनाशविशदे यन्मनोऽम्बरे ।
विभावनीयभावं न स्पृशत्याशापि काचन ॥ ३५ ॥

घनेनामृतपूर्णेन समाक्रान्ते महात्मना ।
न यस्य हृदयाकाशे कप्याशा युक्तमीक्षते ॥ ३६ ॥

बहुधालोचनाक्रान्तपुरुषार्थे पुण्यभोगिनि ।
सर्वंसहत्वविख्याता यच्चित्ते सुस्थिता क्षमा ॥ ३७ ॥

न वा लता रुचिं यस्य दधते हृदये वने ।
कलिकोपक्रमस्तस्मात् न व्यक्तमिह लक्ष्यते ॥ ३८ ॥

अन्यकोटिगिरासेन लक्ष्यकेवलकोटिके ।
त्यक्तकौटिल्यमुद्रे च प्रक्षीणगुणबन्धने ॥ ३९ ॥

हृदये यस्य सुतरां चापलक्षणवर्जिते ।
तीव्राशुगाधियोगोऽयं नेक्ष्यते युक्तमेव तत् ॥ ४० ॥

रजःशान्त्या स्थिरे यस्य चित्ते पावनतां गते ।
लाघवं पवनस्यासीदुचितं सहचारिणः ॥ ४१ ॥

काञ्चनाञ्चलतां यस्य चित्तं समवलम्बते ।
चित्रमत्र पुनर्यत्र भास्वद्विषयको भ्रमः ॥ ४२ ॥

उदारमचलं यस्य समारोहति यो मनः ।
सदाशये न बध्नाति सद्विष्णुपदमप्यहो ॥ ४३ ॥

वहत्यचलतां यस्य चित्तमद्भुतकारिणीम् ।
यदत्र स्पन्दते मन्दं मन्दमेव समीरणः ॥ ४४ ॥

पवनस्याभिवहतः शान्तो न स्याज्जवो यदि ।
अतिसूक्ष्मं मनो यस्य कथं नु कलये स्थितिम् ॥ ४५ ॥

पवनस्पन्दशैथिल्यात् गते नैश्चल्यमुच्चकैः ।
उद्यन्ति मानसे यस्य न चला वृत्तिवीचयः ॥ ४६ ॥

अविद्यासिकतापायात् भास्वद्धामनि सत्यपि ।
नेक्ष्यन्ते यन्मनो भूमौ वृत्तयो मृगतृष्णिकाः ॥ ४७ ॥

अस्पृष्टान्यपदार्थस्य चलित्वैकपदार्थतः ।
यन्मध्ये चेतसो रूपं तद्रूपं यस्य तत्पुनः ॥ ४८ ॥

यदीये हृदयाकाशे मन्दितस्पन्दमारुते ।
चाञ्चल्याभासरहितो दीप्यते ज्ञानदीपकः ॥ ४९ ॥

निष्पन्दवायौ कारुण्यशीतायां यन्मनो भुवि ।
नित्यं प्रदीप्तो ज्ञानाग्निः यादिदं योगवैभवम् ॥ ५० ॥

ज्ञानाग्निदीप्तमप्यन्तः यस्य चात्यन्तशीतलम् ।
धर्मैः साम्यस्थिते यत्र त्यक्तायोन्यविरोधिता ॥ ५१ ॥

यन्मनोगगने ज्ञानगङ्गा सङ्गातिपावने ।
गतिः सत्पक्षिणामेव केवलं योगिनामिव ॥ ५२ ॥

यन्मनःकलितामन्दमोदसीमसमाधिना ।
कदाचिदपि केनापि न मलीमसमाधिना ॥ ५३ ॥

समस्तजगदाधारभूतस्य परमात्मनः ।
यन्मनः कोमलं कामं क्षाममाकलनावशात् ॥ ५३ ॥

अनेकभुवनाभोगासहिष्णु किल यन्मनः ।
एकस्यैवातिसूक्ष्मस्य कलनात् क्षीणमात्मनः ॥ ५५ ॥

महतः क्षीणमप्यन्तर्यस्य सत्वं न मुञ्चति ।
किं पुनर्नास्तितां धत्ते वस्तुतः सत्वभागपि ॥ ५६ ॥

गुणसाम्याभिसृष्टं यन्मनः सत्वविशेषतः ।
क्षीणान्त्यगुणयुग्मं न क्षामं कामं कथं भवेत् ॥ ५७ ॥

भास्वता कलितां कामं काञ्चनद्युतिमावहत् ।
विलीनं यन्मनो जाने स्थाने ज्ञानाग्नियोगतः ॥ ५८ ॥

अहो यस्य महोदारे परमानन्दवारिधौ ।
उद्वेलत्वं समापन्ने चित्तप्रलययोगतः ॥ ५९ ॥

तैस्तैस्तादृग्भिरभितो नानालोकैः समाश्रितः ।
मोहरूपो महापोतो मग्नः क्व पुनरीक्ष्यते ॥ ६० ॥

सद्गुणाकलितां स्वेच्छामालम्बन्नपि तादृशीम् ।
अत्यन्तमलिनस्यन्दे क्षतेप्यन्तरधामनि ॥ ६१ ॥

भासयन् भुवनाभोगभवान् भावाननेकशः ।
यन्मनो दीपकः शान्तो भोग्यस्नेहावसानतः ॥ ६२ ॥

कोपहीनः प्रबोधेन गुहायां यस्य शोभते ।
तेनैव स्पन्दते मन्दं मन्दं मन्त्रसमीरणः ॥ ६३ ॥

निष्पन्दवायौ यस्यान्तर्गुहायां महति स्थितेः ।
निराहारस्य सञ्जाता भोगिनो मनसः क्षयः ॥ ६४ ॥

प्रबोधशिखिना ग्रस्तेऽप्यहो मनसि भोगिनि ।
यस्यान्तरवने मन्दस्पन्द एव समीरणः ॥ ६५ ॥

आक्रान्तमभितोऽप्यन्तमचलेन महात्मना ।
निष्पन्दवातं सञ्जातं मनो यस्य महावनम् ॥ ६६ ॥

इन्ताचलस्थितिं विष्णुपदाकलनलक्षितम् ।
दधन्निष्पन्दपवनं जातं यस्य मनोवनम् ॥ ६७ ॥

अहो महातपःस्फूर्त्या प्रक्षीणे सर्वतो रसे ।
यस्य क्षयं समापन्ना वासनाऽनल्पवाहिनी ॥ ६८ ॥

कामं परिमलस्फारकुरङ्गमदमुज्झति ।
यदीयमानसे युक्तं सञ्जाता वासना क्षयः ॥ ६९ ॥

यदीयकुगुणैकान्तव्युदसनपरे हृदि ।
न कापि वासना कामं युक्तमेव विभाव्यते ॥ ७० ॥

केवलं यस्य हृदये गते विष्णुपदात्मताम् ।
न दृष्टा कुस्थितिस्तेन नेक्ष्यते कापि वासना ॥ ७१ ॥

अहो प्रत्यक्षसंलक्ष्यक्षमायां यन्मनोभुवि ।
अद्भुतं तनुते कस्य न पुनर्वासनाक्षयः ॥ ७२ ॥

दृश्यते यन्मनोभूमौ अजस्रमचला स्थितिः ।
नाद्भुतं तनुते कस्या यस्तस्यां वासना क्षयः ॥ ७३ ॥

माधुर्यश्मश्रुररसा यस्य मन्दाकिनीव धीः ।
वगाह्या विबुधैरेव भाति विष्णुपदेऽनिशम् ॥ ७४ ॥

J-

स्फटिकाच्छा मतिर्यस्य भावनामुपसीदताम् ।
प्रतानुबिम्बं नो धत्ते धत्ते केवलमात्मनः ॥ ७५ ॥

स्फुटत्स्फटिकनैर्मल्यं वहत्यहह यन्मतिः ।
नीललोहितकान्तिं च पीताम्बररुचिं पराम् ॥ ७६ ॥

यन्मतिः शुद्धिसम्बद्धा परमात्मा समाहिता ।
व्युत्थितापि च देहेषु परमात्मा समाहिता ॥ ७७ ॥

कदापि यन्मनः स्वच्छं नितान्तं शमलं घनम् ।
न करोति यतो धत्ते नितान्तशमलं घनम् ॥ ७८ ॥

नित्यं प्रत्यक्षमाधत्ते याति प्रज्ञानवैभवम् ।
सापदीया पुनस्तुच्छं याति प्रज्ञानवैभवम् ॥ ७९ ॥

महापदागमेष्वुच्चैः सत्ववृत्तिं न मुञ्चति ।
यस्य संवर्ण्यतां केन परमात्मनि धीरता ॥ ८० ॥

मतिर्यस्यातिविशदा न कामरसमोहिता ।
धृतिश्चात्यन्तमधुरा न कामरसमोहिता ॥ ८१ ॥

हंसप्रिया मतिर्यस्य शुचिपक्षावलंबिनी ।
युक्तं महामरालीषु भृशं धत्ते प्रशंस्यताम् ॥ ८२ ॥

परानन्दपयो यस्य हंसवल्लभया धिया ।
जलसंकलितं पीतं पृथक्कृत्याखिलं जलम् ॥ ८३ ॥

ददाति यस्य संस्पृष्टं पदमेव परं पदम् ।
स्फुरन् शिरसि पाणिस्तु साम्राज्यच्छत्रति ध्रुवम् ॥ ८४ ॥

विचित्र एक यत्पाणिः कल्पवृक्षस्य पल्लवः ।
दत्ते यदुपसन्नानां वस्तु तूर्णमकल्पितम् ॥ ८५ ॥

स्पृशन् शिरः परं यस्य करो हरति भास्वतः ।
नानावृत्तिलतापुञ्जकीर्णान्तःकुञ्जगं तमः ॥ ८६ ॥

अहो यस्योदयजुषो भास्वतः सत्क्षमाभृतः ।
स्फुटन्करः शिरस्त्वेन हरत्यन्तर्गुहातमः ॥ ८७ ॥

सदोदयाचलास्थित्या स्फुरतां यस्य भास्वतः ।
क्षमाभृतां शिरसि यत्करः स्फुरति सोचितो ॥ ८८ ॥

अहो कुवलयानन्दी यस्य द्विजपतेः करः ।
तपसा आभ्यन्तरमपि व्यपोहति शिरस्स्पृशन् ॥ ८९ ॥

यत्पञ्चशाखाभिस्स्पृष्टमुत्तमाङ्गं वहन्पुमान् ।
प्रपञ्चशाखासम्बद्धं पुनरङ्गं दधाति न ॥ ९० ॥

साधु लेखावलौ श्लाघ्ये नखलक्षणसङ्कृते ।
विज्ञानलक्ष्मीर्द्वे आप्तिस्थिता यस्य सदाशये ॥ ९१ ॥

यस्य द्विजपतेर्यावत्पादोऽमृतरसाञ्चितः ।
न स्पृष्टः शिरसा तावत्कस्तापरहितो भवेत् ॥ ९२ ॥

भूयः किमस्य माहात्म्यं अचलस्य गरीयसः ।
यत्पादगौरवं वक्तुं वागीशा अपि नेशते ॥ ९३ ॥

अमुष्मिन्मानसे हंसविलासालोकनस्पृहा ।
यदीयपादकमलाकलनादेव सिध्यति ॥ ९४ ॥

यस्यैकाध्वरतावाप्यं प्रपश्यन्सुरसं पदम् ।
का वाद्रियेत भूयिष्ठं यागाभ्यां सुरसंपदम् ॥ ९५ ॥

अन्तर्भवन्ति तीर्थानि पाथसामधिपे यथा ।
यस्य दानतपांस्येवं यत्पादाम्बुजसेवने ॥ ९६ ॥

यः पुण्यविटपी साधु बुध्यंकुरविजृम्भितः ।
नानाविधमहाधर्मकर्मपल्लवितस्ततः ॥ ९७ ॥

सौरभं सुमनोरुच्यां लम्भितो देवसम्पदा ।
फलं तदीयममलं यत्पादस्पर्शनोत्सवः ॥ ९८ ॥

येषां च तमसान्धानां जाता स्वपदविस्मृतिः ।
अवश्यमेव कार्यं तैर्यत्पदस्यावलोकनम् ॥ ९९ ॥

सुखगस्य पदं यस्य यद्विष्णुपदखेलिनः ।
आलोकयन्नहो लोको विपदं नैव पश्यति ॥ १०० ॥

यत्पादपद्मस्मरणं समुदायेन सन्ततम् ।
स भव्यः सेव्यते दिव्यसमुदायेन सन्ततम् ॥ १०१ ॥

मनो यदङ्घ्रिपद्मस्य सदा भजनतोषितम् ।
आलंबते परे धाम्नि सदा भजनतोषितम् ॥ १०२ ॥

यदीये यस्य सञ्जातं पदेत्यर्थं सजन्मनः ।
पुनर्न स्यादपि कदा पदेत्यर्थं सजन्मनः ॥ १०३ ॥

यत्पादचिन्तया यस्य कलापि समयो गतः ।
धन्येन तेन विज्ञानकलापि समयो गतः ॥ १०४ ॥

कामना गलिता येन क्षयं यत्पादसेवया ।
कामनां गमिता येन सुखश्रीस्तेन नाकलि ॥ १०५ ॥

यस्य पादरजस्पर्शोऽधुनोत्यन्तर्गतं रजः ।
दृष्टिः सान्द्रतमश्रीश्च शमयत्यान्तरं तमः ॥ १०६ ॥

यो मनोनाशयुक्तोऽपि हृदयालुर्महोदयः ।
सदा मोदाभिपूर्णोऽपि निश्शेषक्षीणवासनः ॥ १०७ ॥

यः परामोदघटितः कलयन् घनसारताम् ।
सुवासनां वितनुते कस्यान्तर्धाम्नि नाविशत् ॥ १०८ ॥

यः शश्वत्पारदृश्वापि श्रुतिस्मृत्यर्थसम्पदाम् ।
नित्यं प्रत्यङ्मुखश्चित्रं विधत्ते विविधं विधिः ॥

आभिमुख्येऽपि यासूनां यं प्रत्यग्विषयस्थितम् ।
अवेक्ष्यते हि [illegible] मतिः ॥ ११० ॥

यः परानन्दलाभाय प्रयच्छति महापदम् ।
नैर्मल्याय च निर्माति मनस्युच्चैं रजस्थितिम् ॥ १११ ॥

हृदैव दग्धवान्नानाकामान् ज्ञानाग्निदीपिना ।
भालानलाभिदग्धैककाममत्येति यः शिवम् ॥ ११२ ॥

समस्तमपि तीक्ष्णेन हृदैव हतवांस्तमः ।
चक्रलूनतमोमस्तं यस्तमत्येति शार्ङ्गिणम् ॥ ११३ ॥

येनामृतकरेणेह बहवो विहिता बुधाः ।
आलिङ्गनाच्च सुमतिं तां सदा रोहिणीं प्रियम् ॥ ११४ ॥

यः क्षामकामदोषोपि ब्रह्मचर्यैकनिष्ठया ।
रागानुरक्तमेवान्तर्हन्त क्षत्ते निरन्तरम् ॥ ११५ ॥

विलासेनावलम्ब्योपि येन सद्ब्रह्मचारिणा ।
दृशापि नैव स्पृश्यन्ते सिद्धयो वारयोषितः ॥ ११६ ॥

मायायोगेन सह तैर्यस्त्यजन्वैभवादरम् ।
ब्रह्मविलातिसक्तो यस्तत्त्वं वेति कः पुनः ॥ ११७ ॥

ईशानेन हृषीकाणां यस्साक्षात्पुरुषोत्तमः ।
परं तु मायास्फुरणं हृदयेनास्य लक्ष्यते ॥ ११८ ॥

नानाप्रमादबीजं यो न मायास्फुरणं वहन् ।
पुरुषं पञ्चकोशेभ्यो विवेचयति सौचिती ॥ ११९ ॥

अतिसूक्ष्मत्वसीमानं अनुद्भूतगुणश्रियम् ।
कमप्यात्मपटं हन्त दर्शयन्वचसैव यः ॥ १२० ॥

प्रकम्पसम्पदं नित्यं प्रत्यक्षमिह तन्वतीम् ।
क्षपयत्युपसन्नानां जाड्यपीडा शरीरिणाम् ॥ १२१ ॥

यस्येच्छया वितन्वन्त्या चित्तमलयभावनाम् ।
उद्वेलत्वं समापन्ने परमानन्दवारिधौ ॥ १२२ ॥

महावरणविक्षेपतटद्वयसमाश्रयात् ।
स्फुरन्तीभिस्तता नानावृत्तिभिर्विषवल्लिभिः ॥ १२३ ॥

माया महावाहिनी यं विषप्रायरसाकुला ।
सर्वात्मनापि विलयं याति नैवान्यथा पुनः ॥ १२४ ॥

पतन्ति द्रुतमामूलात् भित्तयो दुष्टवासनाः ।
अज्ञानावरणस्यापि शीर्यते रचना मनाक् ॥ १२५ ॥

अनल्पकल्पनाबद्धनानासंकल्पलक्षणाः ।
चित्रोपकरणश्रेण्यः क्वचन प्रचलन्ति च ॥ १२६ ॥

कामादिभिरपत्यैश्च समं मम तया स्त्रिया ।
मज्जति क्वापि वैकल्यादहङ्कारगृहाधिपः ॥ १२७ ॥

अहो यस्य कृपावर्षादुच्चैरमृतदायिनः ।
स्फारे ज्ञानतरङ्गिण्याः पूरे दूरेण जृम्भिते ॥ १२८ ॥

कर्त्तुं प्रवृत्ते संसारमायानगरविप्लवम् ।
दशा चिरन्तनस्येयं जायते चित्तसद्मनः ॥ १२९ ॥

इहाविद्यातमीलालास्तोमीभूततमः श्रिया ।
निरस्तसुदिशं स्फीतं संसारजलदागमे ॥ १३० ॥

अहङ्कारमहागर्ते ममतापङ्कसङ्कुले ।
निर्मग्नां विद्धसत्वाङ्गीं कटुकाभादिकण्टकैः ॥ १३१ ॥

व्यालस्त्रियाशया दष्टां किरन्त्या दुःखदुर्विषम् ।
उत्थातुमसहां दुःस्थैश्चतुर्भिः साधनैः पदैः ॥ १३२ ॥

अनाकृतकृपाधारं यं महाब्राह्मणं विना ।
बुद्धिधेनुं समुद्धर्तुमहो कोऽस्ति सहोऽपरः ॥ १३३ ॥

चिरं किल सदाचारशादस्पाकलनावशात् ।
पुष्टसत्वतनुं पीनचतुःसाधनसुस्तनीम् ॥ १३४ ॥

धीधेनुं प्रस्नुतां शास्त्रालोकवत्सोपसत्तितः ।
हृत्पात्रे बोधदुग्धं यत्कृपा दोग्धुं परं क्षमा ॥ १३५ ॥

प्रदुग्धं सत्वदुग्धं यत्सद्वृत्तेः कामधेनुतः ।
कालेन मेदुरीभूतं तदन्तःकलशीकृतम् ॥ १३६ ॥

विचारमन्थं विभ्रत्या यत्कृपागुणसम्हितम् ।
सद्बुद्ध्या मथितं बोधसारं निर्माति निर्मलम् ॥ १३७ ॥

अन्तराक्रान्ततीक्ष्णोग्रबुद्धिलक्षणकण्टकाम् ।
श्रितैः शमादिकगुणैः तुलामिव मुमुक्षुताम् ॥ १३८ ॥

युक्ते विवेकवैराग्यलक्षणे भाजनद्वये ।
तुलयित्वा प्रदत्ते यो जीवात्मानं परात्मना ॥ १३९ ॥

संसारदावयोगे या उदमीलन्नवा नवाः ।
दृशा यस्य ततो दग्धाः करुणारससान्द्रया ॥ १४० ॥

यद्वाण्यामृतरूपिण्या सिक्ते मानसकानने ।
सर्वदुर्वासनादूर्वा न प्ररोहन्ति हन्त ताः ॥ १४१ ॥

लाक्षामषीविरचितां नानावर्णमयीमपि ।
व्यालुप्य कामपि लिपिः स्फुरन्ती चित्तपट्टके ॥ १४२ ॥

काठिन्यैकं लिखति यः स्वच्छं तादृशमक्षरम् ।
न यस्य जडसङ्गेऽपि कोप्यपायः प्रजायते ॥ १४३ ॥

सामान्येनावहन् सम्यगत्यर्थं सत्वरञ्जनम् ।
वितनोति च कैवल्यमत्यर्थं सत्वरञ्जनम् ॥ १४४ ॥

प्रियवाचि शिवाश्लिष्टे सदोपरमद्व्यपि ।
पूजिता पूजिते यस्मिन् देवा ब्रह्मेशविष्णवः ॥ १४५ ॥

सत्वनिर्मलया बुध्या दुग्धमान्तरभाजने ।
प्रस्नुतायाः सदाबोधवत्सनित्योपसत्तितः ॥ १४६ ॥

मुक्तेः कामदुघायास्तत्परमानन्दलक्षणम् ।
पयः पिबन्ति नो मातुस्स्तन्यं यत्सेविनं पुनः ॥ १४७ ॥

पुनः पुनर्त्रजन्त्येव सर्वदा न पराभवम् ।
यत्सेविनस्ततो यातिसर्वदानपराभवम् ॥ १४८ ॥

यस्यानन्यसमा येन मायिना मनसाधुना ।
दूरतस्तेन मुक्तिश्रीर्मायिना मनसा धुता ॥ १४९ ॥

येनातिसत्कृता यस्य सुमहाज्ञानसम्पदः ।
लुठन्ति तस्य हृदये सुमहाज्ञानसम्पदः ॥ १५० ॥

यच्चिन्तया गता भोगसमा सज्जनता नवम् ।
वपुर्न धत्ते सर्वत्र समासज्जनतानवम् ॥ १५१ ॥

वितन्वतीं धियतमो समायां जनितो पदम् ।
यः सेवतैयमत्येति समायां जनिता पदम् ॥ १५२ ॥

सत्यक्षरक्षणाद्यस्य सुखगत्वं न मुञ्चतः ।
योगिनोपि किमाश्चर्यं यदि विष्णुपदेगतिः ॥ १५३ ॥

तमोपहे महस्फारे सदा वासरताश्रये ।
यत्र प्रागचलास्थित्या सत्यनन्तप्रकाशके ॥ १५४ ॥

आमोदमेदुरां हंससमुल्लाससमुज्वलाम् ।
मानसं ननु सन्धत्ते विलसन्नीराजास्थितिम् १५५ ॥

कृत्वा नित्यमहास्फूर्तिभास्वान् हरति यत्तमः ।
यं सेवितुं न रजनीं प्राप्तिं वांच्छन्ति देहिनः ॥ १५६ ॥

नानाप्रत्यययोगेन प्रकृतिर्न प्रपञ्चयन् ।
विज्ञानी शाब्दिकज्ञानेन परं यः प्रतिष्ठितः ॥ १५७ ॥

सत्पदं साधयन्कृत्वा प्रत्ययं प्रकृतः परम् ॥
विज्ञानी शाब्दिकज्ञानेऽप्यत्यन्तं यः प्रतिष्ठितः ॥ १५८ ॥

स्वरूपं ज्योतिषि किञ्चिदेकस्यैव विजानतः ।
विचित्रं यस्य सम्पूर्णतारकं ज्ञानकौशलम् ॥ १५९ ॥

अपवृत्ताश्रयं नालाग्रह्चारमजानतः ।
सर्वदैव विदां मध्ये कथं यस्य प्रशंस्यताम् ॥ १६० ॥

यस्य वाङ्मनसागम्यमहिम्नो वर्णनक्रमः ।
केवलं निजवाग्जालसम्प्रक्षालनहेतवे ॥ १६१ ॥

अक्का जगन्नाथमसूत माता
पिता च नारायणदैवविद्यः ।
तन्निर्मिते ज्ञानविलासनाम्नि
काव्येऽगलत्पञ्चम एष सर्गः ॥

---

## ॥ षष्ठः सर्गः ॥

अथैतस्य निजालोकाभासोपेतप्रचेतसः ।
कुलाधिपतिरातिथ्यं कर्मणा शर्म निर्ममे ॥ १ ॥

कुलाधिपतिना पृष्टेऽब्रवीदागमकारणम् ।
सद्वृत्तिनगरीनाम्नी मुनेऽस्तीह गरीयसी ॥ २ ॥

तत्र सत्त्वप्रकाशाख्यो विद्यते धार्मिको नृपः ।
तस्य शान्तिनितम्बिन्यां आसीत्सुमतिकन्यका ॥ ३ ॥

सा सुशीला परं बाला सर्वसद्गुणभूषिता ।
साम्प्रतं प्राप्ततारुण्या भजते परिणेयताम् ॥ ४ ॥

परमं पुरुषं तस्याः श्रुतवत्याः सतां मुखात् ।
आत्मानमेव प्रेयांसं वरीतुं उदितस्पृहा ॥ ५ ॥

राजापि प्रियकन्यायाः तस्याः फलयितुं स्पृहाम् ।
आत्मानं वरमन्वेष्टुं प्रेषितो भुवमभ्रमम् ॥ ६ ॥

सांख्यादीनां कुले दोषमात्मनः कल्पयन्नहम् ।
कुलं प्राप्तोऽस्मि भवतां युक्तमुक्तगुणात्मना ॥ ७ ॥

कलङ्कगन्धविकलं कुलं वः किल केवलम् ।
विनीतमानन्दमयं साक्षाद्वेदनिवेदितम् ॥ ८ ॥

नानासरांसि संभ्रम्य मराल इव मानसम् ।
कुलेषु बहुषु भ्रान्तः प्राप्य प्राप्तोऽस्मि विभ्रमम् ॥ ९ ॥

कृपामात्रानुबन्धेन तद्यूयं दीनवत्सलाः ।
अनुग्रहीतुमेतां नः सम्बन्धेन किलार्हथ ॥ १० ॥

इत्युक्तस्स गुरुः प्राह किमस्मादुत्तमं परम् ।
शुभोऽयं व्यवसायो वः शीघ्रमेव प्रसिध्यतु ॥ ११ ॥

इत्युक्तोऽसौ प्रहृष्टात्मा समापृच्छ्य कुलाधिपम् ।
आसीददविलम्बेन समीपं धरणीपतेः ॥ १२ ॥

मुखप्रसादनिर्णीतसिद्धिना भूभुजा नतः ।
पृष्टो दृष्टस्ततस्तस्मै सर्वं वृत्तं न्यवेदयत् ॥ १३ ॥

गवेषयितुमात्मानं भ्रमन्नुक्तगुणान्वितम् ।
यद्यथा कृतवानस्मि तदेतदवधार्यताम् ॥ १४ ॥

आत्मनो बहुदोषित्वात् कुलस्यापि सुदूषणात् ।
दूरमेव भयात्त्यक्तं कुलं देहात्मवादिनाम् ॥ १५ ॥

एवमेवेन्द्रियप्राणमनआत्माभिमानिना ।
आत्मनो बहुदोषित्वात्कुलान्यस्तानि दूरतः ॥ १६ ॥

कुलं क्षणिकशून्यात्मवादिनां वेदविच्युतम् ।
नाशित्वात्सत्वदोषित्वादात्मनो दुरमुज्झितम् ॥ १७ ॥

प्राप्तोऽहं चण्डरूपाणां तार्किकाणां कुलं ततः ।
कियद्गुणः कियद्दोषः तत्राप्यात्मोपलक्षितः ॥ १८ ॥

विभुत्वनित्यत्वमुख्या गुणाः समुपलक्षिताः ।
दोषाश्चेच्छाप्रयत्नादिगुणसङ्गविवर्जिताः ॥ १९ ॥

अनित्यबोधवत्वेन जाड्यदोषो महानपि ।
अन्यानप्येवमालोच्य तत्त्यक्त्वा पुरतोऽगमम् ॥ २० ॥

जडाजडत्वदोषित्वादात्मनो नादृतेश्वरम् ।
भाट्टानां कुलमप्यस्तं मयानन्दमथात्मनाम् ॥ २१ ॥

भाट्टानां कुलमागम्य नैय्यायिकमतानुगम् ।
अनीश्वरमपि त्यक्त्वाऽगमं सांख्यं कुलं प्रति ॥ २२ ॥

दृष्टास्त्वेष्टगुणाः प्रायः पुरुषाख्ये तदात्मनि ।
नित्यत्वबोधरूपत्वकृशत्वस्थूलतादयः ॥ २३ ॥

परं दोषद्वयं तत्र महदेतदवेक्षितम् ।
न चायमेकः किन्त्वन्येऽपीदृशाः सन्त्यनेकशः ॥ २४ ॥

निर्विकारत्वमेतस्य कुले तु बहु वर्ण्यते ।
प्रकृत्या परतन्त्रस्य न तद्युक्तं स्वतन्त्रया ॥ २५ ॥

कुलं च दुष्टमेतेषां यदनीश्वरभावनम् ।
तस्मादिदमनादृत्य पुरतो गतवानहम् ॥ २६ ॥

अथ दृष्टं मया हृद्यं शुचि वेदान्तिनां कुलम् ।
चकोरेण तृषार्तेन सुधांशोरिव मण्डलम् ॥ २७ ॥

तत्राभीष्टगुणोपेतो मयात्मा साधु लक्षितः ।
कुलाधिपाय गुरवे स्वाशयश्च निवेदितः ॥ २८ ॥

तेनाप्यङ्गीकृतं साधु कारुण्यैकानुबन्धिना ।
तन्मा विलम्बः सुदिने भवत्वेष महोत्सवः ॥ २९ ॥

तच्छ्रुत्वा वचनं राजा मुदा सीमनि सञ्चरन् ।
कर्तव्यविधिसम्भारं स सम्पूर्णमकारयत् ॥ ३० ॥

कन्यापि तं निशम्यान्तःपुरमुल्लासमासदत् ।
सुधामयूखोद्गमनवार्तयेव कुमुद्वती ॥ ३१ ॥

एकान्ते सुखमासीनां तां प्रफुल्लमुखीं सखी ।
विलज्जमानामवदत् सोपहासमिदं वचः ॥ ३२ ॥

बद्धप्रेमा कुमुदिनी कमनीयेन्दुमण्डले ।
न सत्करोति लहरीं प्रायस्सहचरीमपि ॥ ३३ ॥

प्रत्याह तां प्रियसखि किमिदं प्रोच्यते त्वया ।
सख्यस्यैव तवाशेषः प्रसादोऽयमुदञ्चति ॥ ३४ ॥

यद्यप्यन्वेति शीतांशोरुदयास्तौ कुमुद्वती ।
तथापि लहरी नूनमेतस्या मूलजीवनम् ॥ ३५ ॥

इति तया सममिष्टवयस्यया
विहितसत्परिहासविलासया ।
स्वपरिणये कलनाकृदनेहसो
विदधती परिपालनमावसत् ॥ ३६ ॥

अक्का जगन्नाथमसूत माता
पिता च नारायणदेवविद्यम् ।
तन्निर्मिते ज्ञानविलासनाम्नि
काव्येऽत्र सर्गो विरराम षष्ठः ॥

षष्ठः सर्गः समाप्तः

## ॥ सप्तमः सर्गः ॥

कुलाधिपेन प्रहितो द्रष्टुं कन्यामिहान्तरे ।
विप्रः कृपावलोकाख्यः प्राप्तो भूमिपतिं प्रति ॥ १ ॥

स राजा विहितातिथ्यः सम्यगालोक्य कन्यकाम् ।
प्रत्यावृत्तः कुलपतिं प्राप्येदं समरोचत ॥ २ ॥

सा कन्यकास्ति भवतां यथाश्रुतिपथातिथिः ।
ततोऽप्यधिगुणैर्वाऽद्य मया समवलोकिता ॥ ३ ॥

तस्याः किल वपुस्सत्वं को वर्णयितुमीश्वरः ।
यदाकलनतः सद्यः प्रोद्यतानन्दवीचयः ॥ ४ ॥

सा धैर्योदार्यगाम्भीर्यदाक्षिण्यविनयादिभिः ।
गुणैरनेकैर्युक्तापि भजते गुणमेककम् ॥ ५ ॥

न दीनसङ्गता ताम्रपर्णीव स्वातिविप्लुषः ।
गुरुसूक्तीर्वहति सा श्रुत्या शुक्त्येव निर्मला ॥ ६ ॥

शशाङ्ककान्तिविशदाः सद्गुणप्रतिगुम्फिताः ।
हरन्ति हृदयं तस्याः सूक्तयो मुक्तिका इव ॥ ७ ॥

कुरङ्गमपकर्षन्त्यः स्वपथानतिलङ्घिताः ।
तस्या विनीता राजन्ते सदालोचनरीतयः ॥ ८ ॥

सन्मार्गमनुरुन्धत्यो धुन्वत्यो बाल्यचापलम् ।
तस्या धिन्वन्ति तन्वन्त्यः सदाचरणकेलयः ॥ ९ ॥

प्रकाशयन्ती कुमुदं सुधामोदितलोचना ।
सा चन्द्रिकेव नो धत्ते चित्रं दोषाश्रये रुचिम् ॥ १० ॥

विबुद्धकान्तिः स्वामोदमधुरक्षणबन्धुरा ।
हरते बालिका दृष्टिं मालतीमालिकेव सा ॥ ११ ॥

सखीनां प्रेमघटिता वधूनां स्नेहकल्पिता ।
आर्याणां विनयाक्रान्ता साध्वी सा प्रतिभासते ॥ १२ ॥

अस्त्वसौ शस्त्रसदृशी तारतम्यविडम्बना ।
न तु कुत्रापि वैषम्यगन्धोऽस्याः प्रतिभासते ॥ १३ ॥

सत्वप्रकाशस्स पिता यस्याः शान्तिश्च सा प्रसूः ।
सखी सा भगवद्भक्तिः धात्री सा साधुसङ्गतिः ॥ १४ ॥

कुलतो गुणतो वाऽपि तस्याः साधु परीक्षणम् ।
करस्थकङ्कणेक्षायै नादर्शवदपेक्ष्यते ॥ १५ ॥

इत्यतीव मनोहारि वचः श्रुत्वा कुलाधिपः ।
आसीत्प्रभूतोत्कलिकः तस्मिन् परिणयोत्सवे ॥ १६ ॥

अथैष भूमिपालोपि प्रमोदाकुलमानसः ।
परिवारं समादाय सर्वं प्रास्थत्कुलाधिपम् ॥ १७ ॥

उपयातं भूमिपतिं श्रुत्वा कुलपतिस्ततः ।
परमानन्दसम्पन्नः स्वविधेयं प्रसाधयन् ॥ १८ ॥

आनन्दमण्डपे सिद्धे सुमहीवेदिभूमिके ।
प्रचक्रमे सुसमये राजा परिणयक्रमम् ॥ १९ ॥

नन्दनेनात्मना युक्तः सानन्दः सकुलाधिपः ।
तत्रागादनुभूतिस्त्रीयुतः सोपनिषत्कुलः ॥ २० ॥

जाते सानन्दमिलने कुलाधिपतिभूपयोः ।
विवाहविधिरारब्धो विधिवत्तत्र मण्डपे ॥ २१ ॥

सा पुण्यसुकरस्पर्शमात्मनः प्राप्य कन्यका ।
उद्गादसत्वानन्दैकमयमात्मानमबोधि न ॥ २२ ॥

जातेऽथ पुण्यसुकरग्रहसंन्मङ्गलध्वनौ ।
अज्ञानलाजहोमोऽपि दीप्तबोधानलेऽभवत् ॥ २३ ॥

एवं तयोः परिणयोत्सवे जाते स भूपतिः ।
मैत्र्यादिद्वासिकाद्यं च यौतकं प्रत्यपादयत् ॥ २४ ॥

जीवन्मुक्त्युपकार्यायां समाधानसुमञ्चके ।
अथान्वभूदिमं प्रेयःसमागमसुखोत्सवम् ॥ २५ ॥

अङ्गैर्यमाद्यैरष्टाभिः यो योगः प्रतिपादितः ।
स एवाष्टाङ्गसम्भोगस्तयोः संयोगिनोरभूत् ॥ २६ ॥

सम्प्रज्ञातसमाध्याख्यं प्रागेवाभ्यस्य सारतम् ।
असंप्रज्ञातमभ्यस्य समाधिं पुरुषायितम् ॥ २७ ॥

निर्विकल्पसमाध्याख्ये पाटवं पुरुषायिते ।
विन्दमानाऽपठदसौ गाथात्रयमिदं मुहुः ॥ २८ ॥

आनन्दमात्रपरिशेषविशेषितानि
पूर्णेन्दुसङ्गकलिकाकलनोपमानि ।
द्वैतावभासरहितानि सुयोगिनीनाम्
लभ्यानि केवलमहापुरुषायितानि ॥ २९ ॥

कति कति न सन्ति सुदृशः
पुरुषोपगमे सुखानुभाविन्यः ।
पुरुषायितस्य तु रसः
कुशलधियामेव केवलं विषयः ॥ ३० ॥

सङ्कल्पयामि बहुशः
सविशेषं क्रीडितुं पुरुषे ।
सङ्गमसमये तु किमप्यस्मिन्
न वासीति बत न जानामि ॥ ३१ ॥

एवं तस्याः प्रियाश्लेषाभ्यासशर्मानुवर्तिनः ।
अभवद्व्यवहारेऽपि तत्सुखस्यानुवर्तनम् ॥ ३२ ॥

आपातभासमानापि तस्या व्यापारसंस्कृतिः ।
च्छिन्नवृक्षार्द्रतेवासीत्क्षीयमाणा दिने दिने ॥ ३३ ॥

संस्कारशेषकलिते व्यवहारे स्थितापि सा ।
नष्टं नष्टमुपैक्षिष्ट प्राप्तं प्राप्तमुपाहरत् ॥ ३४ ॥

नोद्वेगमभजद्दुःखे न सुखेप्यकरोत्स्पृहाम् ।
सुलोचना सा व्यतनोद्यथा प्राप्तेन वर्त्तनम् ॥ ३५ ॥

व्यापारेऽपि प्रियाश्लेषपरस्वादानुवर्त्तनम् ।
न च वैषयिके तस्या अबाधेतां सुखासुखे ॥ ३६ ॥

व्यापारेपि स्वादयंत्याः प्रियाश्लेषसुखामृतम् ।
विक्षेपगन्धस्पर्शोऽपि न तस्याः समलक्ष्यत ॥ ३७ ॥

सन्निमग्ना प्रियाश्लेषप्रभूतानन्दसागरे ।
दृक्पथे निपतन्ती सा परमं रसमक्षरत् ॥ ३८ ॥

सर्वोत्तमप्रियाश्लेषरसमग्नामवेक्ष्य ताम् ।
द्राक्चित्तमप्यव्यवतां प्रसादपदमासदत् ॥ ३९ ॥

सा परानन्दसन्दोहसम्भेदसुमनोहरा ।
प्रासादयत्तु नयनाद्दृष्टयैवाव्यवतां मनः ॥ ४० ॥

सामान्यतः सुखवती सा मुग्धानामभासत ।
सुखसारानुभूतिस्तु तस्या ज्ञाता सुबुद्धिभिः ॥ ४१ ॥

सर्वोत्कृष्टप्रियसुखभोगभाग्यमहोदयाम् ।
सानन्दमभ्यनन्दंस्तां सुदृशः साधुलोचनाम् ॥ ४२ ॥

सखीमुखादथाश्रौषीत्प्रियस्यैव गुणान्मुहुः ।
तत्प्रियेषु च संप्रीतिं समबध्नात्सुलोचना ॥ ४६ ॥

पवित्रतममैत्रिकाप्रभृतिदासिकासेविता
रहस्यमणिपेटिकामयमहासखीतोषिता ।
सुधारसनिषेचनोद्गतरसालसाराधिका
समन्यत मनोहरां प्रियकथां विना नाऽपराम् ॥ ४४ ॥

अक्का जगन्नाथमसूत माता
पिता च नारायणदैवविद्यम् ।
तन्निर्मिते ज्ञानविलासनाम्नि
काव्येऽगमत्सप्तम एष सर्गः ॥

---

## ॥ अष्टमः सर्गः ॥

प्रियालिङ्गनसौख्यस्य पुरो विषयजं सुखम् ।
सा तुच्छं मन्वती काममित्यन्तः समकल्पयत् ॥ १ ॥

कृत्वा प्राञ्जलितां ब्रवीमि विषयाः भोः पञ्च शब्दादयः
त्रैलोक्ये सुखहेतवो वयमितीमङ्गर्वमाधत्त मा ।
सत्यं नो कणिकापि काचन सुखस्यातो भवत्सु स्वतः
सौख्याब्धिः प्रियसङ्ग एव तमनु श्रीः कापि युष्मासु सा ॥ २ ॥

निशि निशि शिशिरेण वारिणा य-
द्विममयति भूमिः शशाङ्ककान्तः ।
तदखिलममृतांशुचान्द्रिकायाः
कलयति किल वैभवं न भव्यः ॥ ३ ॥

शाखोटाद्या अपि मलयजासक्तितः शाखिनश्चेत्
पाटीरत्वं दधति दधतां तत्सुखं को निषेद्धा ।
किंत्वारब्धे हिमसुरभितासत्परीतप्रपञ्चे
यद्वैशिष्ट्यं स्फुरति न पुनः गूहितुं शक्यते तत् ॥ ४ ॥

J-

कान्तापगमरसार्द्रा
    यस्मिन्वलते मनोवृत्तिः ।
तं रसमेव गलन्तं
    मुग्धा तस्मिन्सुखतया मनुते ॥ ५ ॥

खादन्निजास्थि शुनकः
    स्वदशनरसमेव तत्र संलग्नम् ।
तन्मधुरिम्णा जानन्
    पुनः पुनर्दशति मन्दमतिः ॥ ६ ॥

सामान्यतो रविकरैः
    प्रकाशते भित्तिभागे यत् ।
कांस्यादेः प्रतिफलनस्फुरणं
    तत्सूर्यकान्तिविस्फुरणम् ॥ ७ ॥

यदि तत्वतस्तु भवतां
    सुखहेतुत्वं भवेत्तदा यूयम् ।
प्रियविरहदुःखमेकं
    विभिन्युरेवाखिला मिलिताः ॥ ८ ॥

तत्प्रेष्ठपुरुषसमागम एव नाम
    जानाति धाम परमप्रमदस्य तावत् ।
अन्तर्भवन्ति निखिला हि सुखावभासाः
    खद्योतकान्तय इवारुणभासि यत्र ॥ ९ ॥

प्रियविरहे दुखदत्ता
    भवतां या सापि वास्तवी नैव ।
प्रियविरहदुःखमेव
    प्रसरति युष्मासु चेत्ततः पततः ॥ १० ॥

दिनकरकरनिकरस्य

व्यतिकरतो वन्हिमुद्रम्य ।

प्रदहन् दिनकरकान्तः

कस्य बुधस्यापवादार्हः ॥ ११ ॥

तस्मान्न दुःखदा अपि

सुखदा अपि यूयमत्र वर्तध्वम् ।

दुःखसुखहेतुरेकः

प्रिय एवासङ्गसङ्गाभ्याम् ॥ १२ ॥

प्रिययोगविरहोऽपि

पश्चाभ्युपयोगमत्र नो भवताम् ।

मुग्धास्तु देवदग्धाः

मन्यन्तामन्यथा दृष्ट्या ॥ १३ ॥

श्रवणे प्ररोचमानः

सुधामहिततां समाकलयन् ।

प्रिय एवानन्तगुणः

स्वसमयावस्था या स्फुरति ॥ १४ ॥

परमहिततामभिवहन्

सत्वगतिः प्रीतिमातन्वन् ।

अत्यन्तकोमलोऽसौ

प्रियमेव सदागतेर्विषयः ॥ १५ ॥

सकलभद्रःसारमयं

संक्रम्य सुलोचनद्वारा ।

अन्तःप्रमोदनकरं

प्रियमेव निरूपये परं रूपम् ॥ १६ ॥

भुवनविलासविशिष्टः
सुधामधरतामथ प्रणयन् ।
रसनोऽतिरुचिविधायी
प्रिय एव हि मे रसः परमः ॥ १७ ॥

अन्वलोदयस्तनुभृतां
गृहीतुमर्हः सु भवनासिकया ।
भ्रमरहितः स्फुरतितरां
प्रिय एव महानिहामोदः ॥ १८ ॥

सुस्वरकलितमुखाभिः
प्रकटितसुरसोदयः श्रुतिभिः ।
प्रिय एव हन्त धत्ते
सुखगायनभाविकरस्वताम् ॥ १९ ॥

जीवनकलाविलासी
बहुविग्रहतापहारी च ।
प्रिय एव हन्त मन्ये
मलयागमनः सदागतिस्स्फुरति ॥ २० ॥

अत्युत्तमोपलाभः
प्रकाशयन् काञ्चन प्रकृतिम् ।
प्रिय एवालङ्कारः
सन्तन्वन् सर्वदेहरुचिम् ॥ २१ ॥

विबुधैर्निबद्धभक्ति
विमलाध्वरतोदितप्राप्तम् ।
भुवनवलयातुलरुचिं
प्रियमेव सुधामवैमि काममहम् ॥ २२ ॥

सन्ततमधुतारुचिः
गतिं वहन् रसभृतामलिनाम् ॥
सुमनःसमुदय एकः
प्रिय एव विभाति सौरभायतनम् ॥ २३ ॥

इत्यसौ सुखमत्यर्थं मन्वाना प्रिययोगजम् ।
क्रीडन्ती स्वेच्छयैवास्ते स्थिता व्यवहृतावपि ॥ २४ ॥

अथात्यन्तं प्रियाश्लेषाभ्यासशर्मानुवृत्तितः ।
ईदृशो व्यवहारोऽपि परप्रेरणयाभवत् ॥ २५ ॥

परैः प्रबोधिता किञ्चित् यथापूर्वं व्यवाहरत् ।
नासीत्तदनु सन्धिस्तु तत्सुखास्वादसङ्गतः ॥ २६ ॥

चिराभ्यासाद्दृढीभूते प्रियसङ्गरसायने ।
स तादृक् व्यवहारस्य गन्धोप्यस्तमितो भवेत् ॥ २७ ॥

साधयन्त्या दृढाभ्यस्तप्रियसङ्गरसाधनम् ।
व्यापारो वा रहःक्रीडा न तस्याः पृथगैक्ष्यत ॥ २८ ॥

इति गाढप्रेमबन्धात् आत्मन्यानन्दमन्दिरे ।
विनात्मना किमपि वा न तस्याः प्रत्यभासत ॥ २९ ॥

प्रियोपि गाढनिर्बद्धः प्रेम्णा कुशलया तथा ।
क्षणमप्येतया तावद्वियुक्तो न व्यभाव्यत ॥ ३० ॥

आत्मानमेव सर्वत्र पश्यन्ती सा सुलोचना ।
किञ्चिन्नाविन्ददात्मानं अहो केयं विचित्रता ॥ ३१ ॥

लहरीव समुद्रस्य विलीना जलनायके ।
विनात्मना सुनयना न सा पृथगलक्ष्यत ॥ ३२ ॥

कलानिधेरिव कला सकले विधुमण्डले ।
नालक्ष्यत पृथक्केन सुखधामनि सात्मनि ॥ ३३ ॥

इत्यात्ममात्रमेवैषा विशेषाभाववर्जिता ।
यादृगासीत्तादृगासीत् तद्वक्तुं तु न शक्नुमः ॥ ३४ ॥

किमानन्दे लीना व्यतिगतपथे वाङ्मनसयोः
किमानन्देनैव प्रसभमतिसान्द्रेण घटिता ।
किमानन्दाकृत्या परिणमनमासाद्य गलिता
यथा सद्भाग्या सा समजनि तथा सैव न परा ॥ ३५ ॥

कृपाकटाक्षेण कृतः कृतार्थो
रामेण दीनैकदयापरेण ।
कश्चिन्मुमुक्षुः सुजनांघ्रिरेणुः
नाम्ना जगन्नाथ इति प्रतीतः ॥ ३६ ॥

मन्देनापि भृशं नितान्तगहनं श्रुत्यन्तमार्गानुगः
तेन ज्ञानविलास इत्यभिधया यत्सत्प्रबन्धः कृतः ।
तज्जानन्तु महाजना न रचना सेयं मदीया पुनः
लीलोन्मीलितमीहितं रघुपतेः तत्सर्वधीबोधिनः ॥ ३७ ॥

एषा सद्रचना मयैव विहितेत्येवं समाहंकृतौ
युक्ता स्यात्सदसद्विचारविषये विद्यावतां प्रार्थना ।
अन्तर्यामितया सतो रघुपतेरेवोत्तमां कल्पनां
जानेऽहं तु ततः सतो बुधजनाः पश्येयुरेनां मुदा ॥ ३८ ॥

अक्का जगन्नाथमसूत माता
पिता च नारायणदैवविद्यम् ।
तन्निर्मिते ज्ञानविलासकाव्ये
सर्गो यथावष्टम उत्तमत्वम् ।

॥ अष्टमः सर्गः समाप्तः ॥

॥ इति ज्ञानविलासकाव्यं समाप्तम् ॥

॥ श्रीरस्तु ॥



॥ एतत्काव्यार्थसङ्ग्रहोऽयम् ॥

सद्वृत्तिः पूः प्रशस्ता भुवि तदधिपतिः कोऽपि सत्त्वप्रकाशः
शान्तिः कान्तास्य पुत्री सुमतिरिति सतां सङ्गतिर्धामपुण्यात् ।
सख्या सा विष्णुभक्त्या हरिभजनमुपाशिंक्षि बाल्ये प्रगल्भा
सख्यात्मानं वरितुं वरमिह विषये भूरिवैरस्यमाप ॥ १ ॥

ज्ञात्वा सत्त्वप्रकाशः सुमतिपरिणतिं तद्वरं सद्विचारात्
वेदान्तेषूपलक्ष्य प्रथितमथ गुरुं प्रश्रयेणोपसद्य ।
तेनादिष्टं सुमत्या सह वरपुरुषं योजयित्वा कृतार्थः
साक्षादानन्दसान्द्रामलभत परमां योगभूमिं सशान्ताम् ॥ २ ॥

परिभाव्येनमुद्दिष्टमेतत्काव्यार्थसङ्ग्रहम् ।
व्याख्यानमनुगृह्णन्तु मया कृतमिदं बुधाः ॥ ३ ॥

॥ श्रीरस्तु ॥

॥ श्री गङ्गायै नमः ॥

